# चम्पूरामायणे

# बालकाण्डम्

२३ – २८.०५.२०१८

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology



vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

# पुनरावर्तनम्

- विश्वामित्रेण सह रामलक्ष्मणयोः प्रस्थानम्
- बला-अतिबलामन्त्रयोः उपदेशः, अङ्गदेशस्य दर्शनम्
- मलद-करूषदेशयोः सीम्नि प्रवेशः, ताटकावृत्तान्तः
- ताटकायाः वर्णनम् – तत्काले पिशिताश
- ताटकावधः – अथ दाशरथेः कर्णम्, ततो भाविनि
- जृम्भकादीनाम् अस्त्राणामुपदेशः - मुनिर्भृशाश्वोपज्ञानि

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# तत्र कञ्चन विरिञ्चिलोकप्रत्यादेशं प्रदेशं प्रदर्शयन्नवोचत् ।

- तत्र, कञ्चन, विरिञ्चि-लोक-प्रत्यादेशम्, प्रदेशम्, प्रदर्शयन्, अवोचत् ।
- तत्र = वने
- कञ्चन
- प्रदेशम् = स्थलम्
- विरिञ्चि-लोक-प्रत्यादेशम् = ब्रह्मलोकादपि विशिष्टम्

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam · Value Education · Technology

# तत्र कञ्चन विरिञ्चिलोकप्रत्यादेशं प्रदेशं प्रदर्शयन्नवोचत् ।

- प्रदर्शयन् = दर्शयन् (विश्वामित्रः)
- अवोचत् = उक्तवान्

- तात्पर्य्यम् = तस्मिन् वने ब्रह्मलोकतुल्यं स्थानमेकं प्रदर्श्य विश्वामित्रः उक्तवान् ।

# तत्र कञ्चन विरिञ्चिलोकप्रत्यादेशं प्रदेशं प्रदर्शयन्नवोचत् ।

- विरिञ्चिलोकप्रत्यादेशम् – विरिञ्चेः लोकः, विरिञ्चिलोकस्य प्रत्यादेशः । "विरिञ्चिः कमलासनः", "प्रत्याख्यानं निरसनं प्रत्यादेशो निराकृतिः" (अमरः)
- प्रदर्शयन् + अवोचत् – ङमुडागमसन्धिः
- अवोचत् – "ब्रूञ् व्यक्तायां वाचि" – लुङ्, प्रथम.१

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

प्रतिदिनमवदातैर्ब्रह्मभिर्ब्रह्मनिष्ठैः
प्रशमितभवखेदैः सादरं सेव्यमाने ।
बलिनियमनहेतोर्वामनः काननेऽस्मिन्
बलिनियमपरस्सन् ब्रह्मचारी चचार ॥४५॥

- प्रति-दिनम्, अवदातैः, ब्रह्मभिः, ब्रह्मनिष्ठैः, प्रशमित-भव-खेदैः, सादरम्, सेव्यमाने, बलि-नियमन-हेतोः, वामनः, कानने, अस्मिन्, बलि-नियम-परः, सन्, ब्रह्मचारी, चचार

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam · Value Education · Technology

प्रतिदिनमवदातैर्ब्रह्मभिर्ब्रह्मनिष्ठैः प्रशमितभवखेदैः सादरं सेव्यमाने ।
बलिनियमनहेतोर्वामनः काननेऽस्मिन् बलिनियमपरस्सन् ब्रह्मचारी चचार ॥४५

- चचार = सञ्चरितवान्
- कः चचार? वामनः = वामनरूपधारी महाविष्णुः
- कीदृशः वामनः? ब्रह्मचारी, बलिनियमपरः सन्
- ब्रह्मचारी = मायावटुः
- बलिनियमपरः = ब्रह्मचर्यविधिनिष्ठः [बलिः – इष्टदेवतापूजोपहारः, नियमाः – शौच-सन्तोष-तपस्-स्वाध्याय-ईश्वरप्रणिधानानि]

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

प्रतिदिनमवदातैर्ब्रह्मभिर्ब्रह्मनिष्ठैः प्रशमितभवखेदैः सादरं सेव्यमाने ।
बलिनियमनहेतोर्वामनः काननेऽस्मिन् बलिनियमपरस्सन् ब्रह्मचारी चचार ॥४५

- किमर्थं चचार? बलिनियमनहेतोः = महाबलेः मर्दनार्थम्
- कुत्र चचार? अस्मिन् कानने = वने, पुण्यारण्ये
- कीदृशे कानने? प्रतिदिनम् = प्रत्यहम्, सादरम् = सस्नेहम्, सेव्यमाने = अधिष्ठीयमाने

प्रतिदिनमवदातैर्ब्रह्मभिर्ब्रह्मनिष्ठैः प्रशमितभवखेदैः सादरं सेव्यमाने ।
बलिनियमनहेतोर्वामनः काननेऽस्मिन् बलिनियमपरस्सन् ब्रह्मचारी चचार ॥४५

- कैः सेव्यमाने? ब्रह्मभिः = ब्रह्मर्षिभिः
- कीदृशैः ब्रह्मभिः? अवदातैः = निर्मलान्तःकरणैः, ब्रह्मनिष्ठैः = निदिध्यासनतत्परैः, प्रशमितभवखेदैः = तापत्रयविनिर्मुक्तैः

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

प्रतिदिनमवदातैर्ब्रह्मभिर्ब्रह्मनिष्ठैः प्रशमितभवखेदैः सादरं सेव्यमाने ।
बलिनियमनहेतोर्वामनः काननेऽस्मिन् बलिनियमपरस्सन् ब्रह्मचारी चचार ॥४५

- अन्वयः – अवदातैः, ब्रह्मनिष्ठैः, प्रशमितभवखेदैः ब्रह्मभिः प्रतिदिनं सादरं सेव्यमाने अस्मिन् कानने ब्रह्मचारी वामनः बलिनियमपरः सन् बलिनियमनहेतोः चचार ।
- तात्पर्य्यम् – इदं पुण्यारण्यं निर्मलान्तःकरणैः, ब्रह्मणि तत्परैः, तापत्रयविनिर्मुक्तैः ब्रह्मर्षिभिः प्रत्यहं सस्नेहं सेव्यते । अस्मिन्नेव कानने मायावटुः वामनः महाबलेः मर्दनार्थं बलिनियमादिकं ब्रह्मचर्यविधिं पालयन् सञ्चरितवान् ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education - Technology

प्रतिदिनमवदातैर्ब्रह्मभिर्ब्रह्मनिष्ठैः प्रशमितभवखेदैः सादरं सेव्यमाने ।
बलिनियमनहेतोर्वामनः काननेऽस्मिन् बलिनियमपरस्सन् ब्रह्मचारी चचार ॥४५

- प्रतिदिनम् – दिनं दिनं प्रति । अव्ययीभावसमासः ।
- अवदातैः – "अवदातः सिते पीते शुद्धे" (अमरः)
- ब्रह्मभिः – नकारान्तः, पुं, ३.३ । "वेदास्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः" (अमरः)
- ब्रह्मनिष्ठैः – ब्रह्मणि निष्ठा येषां ते, तैः ।
- प्रशमितभवखेदैः – प्रशमितः भवखेदः येषां तैः

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

प्रतिदिनमवदातैर्ब्रह्मभिर्ब्रह्मनिष्ठैः प्रशमितभवखेदैः सादरं सेव्यमाने ।
बलिनियमनहेतोर्वामनः काननेऽस्मिन् बलिनियमपरस्सन् ब्रह्मचारी चचार ॥४५

- सादरम् – आदरेण सह । अव्ययीभावः ।
- सेव्यमाने – कर्मणि शानच् ।
- ब्रह्मचारी – नकारान्तः पुं १.१ ।
- चचार – चर गतौ, लिट्, प्रथम.१ ।
- मालिनीवृत्तम् ।

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

अपहृतविबुधार्तेर्वामनस्याजमूर्ते-
रखिलभुवनभिक्षोराश्रमानोकहानाम् ।
ततिरियमतिनीला व्याप्तदिग्व्योमसीमा
स्वयमपि परिमातुं लोकमभ्युद्यतेव ॥४६॥

- अपहृत-विबुध-आर्तेः, वामनस्य, अज-मूर्तेः, अखिल-भुवन-भिक्षोः, आश्रम-अनोकहानाम्, ततिः, इयम्, अति-नीला, व्याप्त-दिग्-व्योम-सीमा, स्वयम्, अपि, परिमातुम्, लोकम्, अभि-उद्यता, इव

अपहृतविबुधार्तेर्वामनस्याजमूर्तेरखिलभुवनभिक्षोराश्रमानोकहानाम् ।
ततिरियमतिनीला व्याप्तदिग्व्योमसीमा स्वयमपि परिमातुं लोकमभ्युद्यतेव ॥४६

- अभ्युद्यता इव = समुद्युक्ता इव (दृश्यते)
- का अभ्युद्यता? इयं ततिः = श्रेणिः
- केषां ततिः? आश्रमानोकहानाम् = आश्रमवृक्षाणाम्
- कीदृशी ततिः? अतिनीला = अत्यन्तश्यामला, व्याप्तदिग्व्योमसीमा = आक्रान्तगगनतला

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

अपहृतविबुधार्तेर्वामनस्याजमूर्तेरखिलभुवनभिक्षोराश्रमानोकहानाम् ।
ततिरियमतिनीला व्याप्तदिग्व्योमसीमा स्वयमपि परिमातुं लोकमभ्युद्यतेव ॥४६

- कस्य आश्रमानोकहानां ततिः? वामनस्य
- कीदृशस्य वामनस्य? अपहृतविबुधार्तेः = परिहृतदेवसन्तापस्य, अजमूर्तेः = विष्णोः अवतारभूतस्य, अखिलभुवनभिक्षोः = त्रिभुवनमेव भिक्षारूपेण प्राप्तवतः
- किमर्थम् अभ्युद्यता? स्वयमपि लोकं = भुवनम्, परिमातुम् = परिच्छेत्तुम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

अपहृतविबुधार्तेर्वामनस्याजमूर्तेरखिलभुवनभिक्षोराश्रमानोकहानाम् ।
ततिरियमतिनीला व्याप्तदिग्व्योमसीमा स्वयमपि परिमातुं लोकमभ्युद्यतेव ॥४६

- अन्वयः – अपहृतविबुधार्तेः अजमूर्तेः अखिलभुवनभिक्षोः वामनस्य आश्रमानोकहानाम् इयं ततिः अतिनीला व्याप्तदिग्व्योमसीमा स्वयमपि लोकं परिमातुम् अभ्युद्यता इव (दृश्यते) ।
- तात्पर्य्यम् – महाविष्णुः देवानां सन्तापनाशनाय वामनरूपेण अवतीर्य त्रिभुवनमेव भिक्षारूपेण प्राप्तवान् । तस्य आश्रमवृक्षाणाम् इयं श्रेणिः अत्यन्तश्यामला, दिगन्तान् व्याप्य स्वयमपि लोकान् परिच्छेत्तुं समुद्युक्ता इव भासते ।

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskrtam · Value Education · Technology

अपहृतविबुधार्तेर्वामनस्याजमूर्तेरखिलभुवनभिक्षोराश्रमानोकहानाम् ।
ततिरियमतिनीला व्याप्तदिग्व्योमसीमा स्वयमपि परिमातुं लोकमभ्युद्यतेव ॥४६

- अपहृतविबुधार्तेः – विबुधानाम् आर्तिः, अपहृता विबुधार्तिः येन सः, तस्य। "अमरा निर्जरा देवाः त्रिदशा विबुधाः सुराः" (अमरः)
- अजमूर्तिः – न जायते इति अजः = विष्णुः, अजस्य मूर्तिः
- अखिलभुवनभिक्षोः – अखिलं भुवनम्, अखिलभुवनस्य भिक्षुः, तस्य

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

अपहृतविबुधार्तेर्वामनस्याजमूर्तेरखिलभुवनभिक्षोराश्रमानोकहानाम् ।
ततिरियमतिनीला व्याप्तदिग्व्योमसीमा स्वयमपि परिमातुं लोकमभ्युद्यतेव ॥४६

- आश्रमानोकहानाम् – आश्रमस्य अनोकहाः, तेषाम् । “वृक्षो महीरुहः शाखी... अनोकहः कुटः सालः” (अमरः)
- ततिः – इकारान्तः, स्त्री, १.१
- व्याप्तदिग्व्योमसीमा – दिशश्च व्योम च दिग्व्योमनी, दिग्व्योम्नोः सीमा, व्याप्ता दिग्व्योमसीमा यया सा

Vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

अपहृतविबुधार्तेर्वामनस्याजमूर्तेरखिलभुवनभिक्षोराश्रमानोकहानाम् ।
ततिरियमतिनीला व्याप्तदिग्व्योमसीमा स्वयमपि परिमातुं लोकमभ्युद्यतेव ॥४६

- परिमातुम् – परि + “मा माने” + तुमुन्
- अभ्युद्यता – अभि + उत् + “यम उपरमे” + क्त – आकारान्तः, स्त्री, १.१

- उत्प्रेक्षालङ्कारः
- मालिनीवृत्तम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

इति विविधरसाभिः कौशिकव्याहृताभिः
श्रुतिपथमधुराभिः पावनीभिः कथाभिः ।
गलितगहनकृच्छ्रं गच्छतोर्दाशरथ्योः
समकुचदिव सद्यस्तादृशं मार्गदैर्घ्यम् ॥४७॥

- इति, विविध-रसाभिः, कौशिक-व्याहृताभिः, श्रुति-पथ-मधुराभिः, पावनीभिः, कथाभिः, गलित-गहन-कृच्छ्रम्, गच्छतोः, दाशरथ्योः, समकुचत्, इव, सद्यः, तादृशम्, मार्ग-दैर्घ्यम्

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam - Value Education - Technology

इति विविधरसाभिः कौशिकव्याहृताभिः श्रुतिपथमधुराभिः पावनीभिः कथाभिः ।
गलितगहनकृच्छ्रं गच्छतोर्दाशरथ्योः समकुचदिव सद्यस्तादृशं मार्गदैर्घ्यम् ॥४७

- समकुचत् इव = ह्रस्वीभूतः इव (आसीत्)
- किं समकुचत्? तादृशम् = तथाविधम् अत्यधिकम्, मार्गदैर्घ्यम् = मार्गस्य आयामः
- कदा समकुचत्? सद्यः = तत्क्षणम्
- कयोः मार्गदैर्घ्यम्? दाशरथ्योः = रामलक्ष्मणयोः

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam - Value Education - Technology

इति विविधरसाभिः कौशिकव्याहृताभिः श्रुतिपथमधुराभिः पावनीभिः कथाभिः ।
गलितगहनकृच्छ्रं गच्छतोर्दाशरथ्योः समकुचदिव सद्यस्तादृशं मार्गदैर्घ्यम् ॥४७

- कीदृशयोः दाशरथ्योः? गलितगहनकृच्छ्रम् = काननसञ्चारस्य कष्टं विना, गच्छतोः = चलतोः
- केन हेतुना समकुचत्? कथाभिः = उपाख्यानैः
- कीदृशीभिः कथाभिः? इति = पूर्वोक्तप्रकारेण, विविधरसाभिः = बहुप्रकारकरसयुक्तैः, कौशिकव्याहृताभिः = विश्वामित्रकथिताभिः, श्रुतिपथमधुराभिः = कर्णानन्दकरीभिः, पावनीभिः = पवित्राभिः

इति विविधरसाभिः कौशिकव्याहृताभिः श्रुतिपथमधुराभिः पावनीभिः कथाभिः ।
गलितगहनकृच्छ्रं गच्छतोर्दाशरथ्योः समकुचदिव सद्यस्तादृशं मार्गदैर्घ्यम् ॥४७

- अन्वयः - इति विविधरसाभिः, श्रुतिपथमधुराभिः, पावनीभिः, कौशिकव्याहृताभिः कथाभिः गलितगहनकृच्छ्रं गच्छतोः दाशरथ्योः तादृशं मार्गदैर्घ्यं सद्यः समकुचत् इव ।
- तात्पर्य्यम् – एवंप्रकारेण बहुप्रकारकरसयुक्तानि कर्णानन्दकराणि पवित्राणि विश्वामित्रकथितानि उपाख्यानानि शृण्वतोः रामलक्ष्मणयोः वनसञ्चारस्य कष्टस्य अनुभवः एव नाभूत् । किञ्च, तादृशः दीर्घः मार्गः अपि तत्क्षणादेव ह्रस्वीभूतः इव आसीत् ।

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam - Value Education - Technology

इति विविधरसाभिः कौशिकव्याहृताभिः श्रुतिपथमधुराभिः पावनीभिः कथाभिः ।
गलितगहनकृच्छ्रं गच्छतोर्दाशरथ्योः समकुचदिव सद्यस्तादृशं मार्गदैर्घ्यम् ॥४७

- विविधरसाभिः – विविधाः रसाः यासाम्, ताभिः
- कौशिकव्याहृताभिः – कौशिकेन व्याहृताः, ताभिः
- श्रुतिपथमधुराभिः – श्रुतेः पन्थाः, श्रुतिपथस्य मधुराः, ताभिः
- गलितगहनकृच्छ्रम् – गहनस्य कृच्छ्रम्, गलितं गहनकृच्छ्रं यस्मिन् कर्मणि

"गहनं काननं वनम्", "स्यात् कष्टं कृच्छ्रमाभीलम्" (अमरः)

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

इति विविधरसाभिः कौशिकव्याहृताभिः श्रुतिपथमधुराभिः पावनीभिः कथाभिः ।
गलितगहनकृच्छ्रं गच्छतोर्दाशरथ्योः समकुचदिव सद्यस्तादृशं मार्गदैर्घ्यम् ॥४७

- गच्छतोः – “गम्लृ गतौ” + शतृ, तकारान्तः, पुं, ६.२
- दाशरथ्योः – दशरथस्य अपत्ये पुमांसौ – इकारान्तः, पुं, ६.२
- समकुचत् – सम् + “कुच सङ्कोचने” – लङ्, प्रथम.१
- मार्गदैर्घ्यम् – दीर्घस्य भावः दैर्घ्यम् । मार्गस्य दैर्घ्यम् ।
- उत्प्रेक्षालङ्कारः, मालिनीवृत्तम् ।

# ततः सिद्धाश्रमं प्रविश्य विश्वामित्रः सत्रमारभत ।

- ततः, सिद्धाश्रमम्, प्रविश्य, विश्वामित्रः, सत्रम्, आरभत ।
- ततः = तदनन्तरम्
- सिद्धाश्रमम् = तन्नामकं स्वतपोवनम्
- प्रविश्य
- विश्वामित्रः = कौशिकः

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

# ततः सिद्धाश्रमं प्रविश्य विश्वामित्रः सत्रमारभत ।

- सत्रम् = यज्ञम्
- आरभत = प्रारब्धवान्

- सत्रम् = "सत्रमाच्छादने यज्ञे" (अमरः)

# सङ्क्षेपः

- वामनाश्रमस्य वर्णनम् – प्रतिदिनमवदातैः, अपहृतविबुधार्तेः
- विश्वामित्रकथाभिः दाशरथ्योः सङ्कुचितः पन्थाः – इति विविधरसाभिः
- विश्वामित्रस्य यागारम्भः






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in








- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in